भिमृशतीत्यभि-मृशति । अक्षितिम् । एव । एनत् । गमयति । न । अस्य । अ
मुष्मिन्न् । लोके । अन्नम् । क्षीयते ॥ [१४] अन्वाहार्येणप्रजापतेरसिद्व्मुष्मिँल्लो
केपञ्चदशच ॥ ❀ ❀ ❀ ❀ ❀ ॥३॥

बर्हिषः । अहम् । देवयज्ययेतिदेव-यज्यया । प्रजावानितिप्रजा-वान् । भूयासम् । इ
ति । आह । बर्हिषा । वै । प्रजापतिरितिप्रजा-पतिः । प्रजाइतिप्र-जाः । असृजत । तेन ।
एव । प्रजाइतिप्र-जाः । सृजते । नराशꣳसस्य । अहम् । देवयज्ययेतिदेव-यज्यया ।
पशुमानितिपशु-मान् । भूयासम् । इति । आह । नराशꣳसेन । वै । प्रजापतिरितिप्रजा-
पतिः । पशून् । असृजत । तेन । एव । पशून् । सृजते । अग्नेः । स्विष्टकृतइति
स्विष्ट-कृतः । अहम् । देवयज्ययेतिदेव-यज्यया । आयुष्मान् । यज्ञेन । प्रतिष्ठामि
तिप्रति-स्थाम् । गमेयम् । इति । आह । आयुः । एव । आत्मन्न् । धत्ते । प्रतीति ।
यज्ञेन । तिष्ठति । दर्शपूर्णमासयोरितिदर्श-पूर्णमासयोः । [१५] वै । देवाः ।
उज्जितिमित्युत्-जितिम् । अनु । उदिति । अजयन्न् । दर्शपूर्णमासाभ्यामितिदर्
श-पूर्णमासाभ्याम् । असुरान् । अपेति । अनुदन्त । अग्नेः । अहम् । उज्जितिमि
त्युत्-जितिम् । अनु । उदिति । जेषम् । इति । आह । दर्शपूर्णमासयोरितिदर्
श-पूर्णमासयोः । एव । देवतानाम् । यजमानः । उज्जितिमित्युत्-जितिम् । अनु ।
उदिति । जयति । दर्शपूर्णमासाभ्यामितिदर्श-पूर्णमासाभ्याम् । भ्रातृव्यान् । अपे
ति । नुदते । वाजवतीभ्यामितिवाज-वतीभ्याम् । वीति । ऊहति । अन्नम् । वै ।
वाजः । अन्नम् । एव । अवेति । रुन्धे । द्वाभ्याम् । प्रतिष्ठित्याइतिप्रति-स्थित्यै ।
यः । वै । यज्ञस्य । द्वौ । दोहौ । विद्वान् । यजते । उभयतः । [१६] एव । य
ज्ञम् । दुहे । पुरस्तात् । च । उपरिष्टात् । च । एषः । वै । अन्यः । यज्ञस्य । दो
हः । इडायाम् । अन्यः । यर्हि । होता । यजमानस्य । नाम । गृह्णीयात् । तर्
हि । ब्रूयात् । एति । इमाः । अग्मन्न् । आशिषइत्या-शिषः । दोहकामाइतिदो
ह-कामाः । इति । सꣳस्तुताइतिसं-स्तुताः । एव । देवताः । दुहे । अथो
इति । उभयतः । एव । यज्ञम् । दुहे । पुरस्तात् । च । उपरिष्टात् । च । रो
हितेन । त्वा । अग्निः । देवताम् । गमयतु । इति । आह । एते । वै । देवाश्वाइति
देव-अश्वाः । [१७] यजमानः । प्रस्तरइतिप्र-स्तरः । यत् । एतैः । प्रस्तरमिति

प्र-स्तरम् । प्रहरतीतिप्र-हरति । देवाश्वैरितिदेव-अश्वैः । एव । यजमानम् । सुवर्ग मितिसुवः-गम् । लोकम् । गमयति । वीति । ते । मुञ्चामि । रशनाः । वीति । र श्मीन् । इति । आह । एषः । वै । अग्नेः । विमोकइतिवि-मोकः । तेन । एव । ए नम् । वीति । मुञ्चति । विष्णोः । शंय्योरितिशं-योः । अहम् । देवयज्ययेतिदेव-यज्यया । यज्ञेन । प्रतिष्ठामितिप्रति-स्थाम् । गमेयम् । इति । आह । यज्ञः । वै । विष्णुः । यज्ञे । एव । अन्ततः । प्रतीति । तिष्ठति । सोमस्य । अहम् । देवयज्य येतिदेव-यज्यया । सुरेताइतिसु-रेताः । [१८] रेतः । धिषीय । इति । आह । सो मः । वै । रेतोधाइति रेतः-धाः । तेन । एव । रेतः । आत्मन् । धत्ते । त्वष्टुः । अ हम् । देवयज्ययेतिदेव-यज्यया । पशूनाम् । रूपम् । पुषेयम् । इति । आह । त्व ष्टा । वै । पशूनाम् । मिथुनानाम् । रूपकृदितिरूप-कृत् । तेन । एव । पशूनाम् । रूपम् । आत्मन् । धत्ते । देवानाम् । पत्नीः । अग्निः । गृहपतिरितिगृह-पतिः । य ज्ञस्य । मिथुनम् । तयोः । अहम् । देवयज्ययेतिदेव-यज्यया । मिथुनेन । प्रेति । भूयासम् । इति । आह । एतस्मात् । वै । मिथुनात् । प्रजापतिरितिप्रजा-पतिः । मिथुनेन । [१९] प्रेति । अजायत । तस्मात् । एव । यजमानः । मिथुनेन । प्रे ति । जायते । वेदः । असि । वित्तिः । असि । विदेयं । इति । आह । वेदेन । वै । देवाः । असुराणाम् । वित्तम् । वेद्यम् । अविन्दन्त । तत् । वेदस्य । वेदत्वमितिवे द-त्वम् । यद्यदितियत्-यत् । भ्रातृव्यस्य । अभिध्यायेदित्यभि-ध्यायेत् । तस्य । ना म । गृह्णीयात् । तत् । एव । अस्य । सर्वम् । वृङ्क्ते । घृतवन्तमितिघृत-वन्तम् । कुलायिनम् । रायः । पोषम् । सहस्रिणम् । वेदः । ददातु । वाजिनम् । इति । आ ह । प्रेति । सहस्रम् । पशून् । आप्नोति । एति । अस्य । प्रजायामितिप्र-जायाम् । वाजी । जायते । यः । एवम् । वेद ॥ [२०] दर्शपूर्णमासयोरुभयतोदेवाश्वास्सु रेताःप्रजापतिर्मिथुनेनाप्नोत्यष्टौच ॥ ❀ ❀ ❀ ॥४॥

ध्रुवाम् । वै । रिच्यमानाम् । यज्ञः । अन्विति । रिच्यते । यज्ञम् । यजमा नः । यजमानम् । प्रजाइतिप्र-जाः । ध्रुवाम् । आप्यायमानामित्या-प्यायमानाम् । यज्ञः । अनु । एति । प्यायते । यज्ञम् । यजमानः । यजमानम् । प्रजाइतिप्र-जाः । एति । प्यायताम् । ध्रुवा । घृतेन । इति । आह । ध्रुवाम् । एव । एति । प्यायय

ति । ताम् । आप्यायमानामित्या-प्यायमानाम् । यज्ञः । अनु । एति । प्यायते । यज्ञम् । यजमानः । यजमानम् । प्रजाइतिप्र-जाः । प्रजापतेरितिप्रजा-पतेः । विभानितिवि-भान् । नाम । लोकः । तस्मिन्न् । त्वा । दधामि । सह । यजमानेन । इति । [२१] आह । अयम् । वै । प्रजापतेरितिप्रजा-पतेः । विभानितिवि-भान् । नाम । लोकः । तस्मिन्न् । एव । एनम् । दधाति । सह । यजमानेन । रिच्यते । इव । वै । एतत् । यत् । यजते । यत् । यजमानभागमितियजमान-भागम् । प्राश्नातीतिप्र-अश्नाति । आत्मानम् । एव । प्रीणाति । एतावान् । वै । यज्ञः । यावान् । यजमानभागइतियजमान-भागः । यज्ञः । यजमानः । यत् । यजमानभागमितियजमान-भागम् । प्राश्नातीतिप्र-अश्नाति । यज्ञे । एव । यज्ञम् । प्रतीति । स्थापयति । एतत् । वै । सूयवसमितिसु-यवसम् । सोदकमितिस-उदकम् । यत् । बर्हिः । च । आपः । च । एतत् । [२२] यजमानस्य । आयतनमित्या-यतनम् । यत् । वेदिः । यत् । पूर्णपात्रमितिपूर्ण-पात्रम् । अन्तर्वेदीत्यन्तः-वेदि । निनयतीतिनि-नयति । स्वे । एव । आयतनइत्या-यतने । सूयवसमितिसु-यवसम् । सोदकमितिस-उदकम् । कुरुते । सत् । असि । सत् । मे । भूयाः । इति । आह । आपः । वै । यज्ञः । आपः । अमृतम् । यज्ञम् । एव । अमृतम् । आत्मन्न् । धत्ते । सर्वाणि । वै । भूतानि । व्रतम् । उपयन्तामित्युप-यन्तम् । अनु । उपेति । यन्ति । प्राच्याम् । दिशि । देवाः । ऋत्विजः । मार्जयन्ताम् । इति । आह । एषः । वै । दर्शपूर्णमासयोरितिदर्श-पूर्णमासयोः । अवभृथइत्यव-भृथः । [२३] यानि । एव । एनम् । भूतानि । व्रतम् । उपयन्तामित्युप-यन्तम् । अनूपयन्तीत्यनु-उपयन्ति । तैः । एव । सह । अवभृथमित्यव-भृथम् । अवैति । एति । विष्णुमुखाइतिविष्णु-मुखाः । वै । देवाः । छन्दोभिरितिछन्दः-भिः । इमान् । लोकान् । अनपजय्यमित्यनप-जय्यम् । अभीति । अजयन्न् । यत् । विष्णुक्रमानितिविष्णु-क्रमान् । क्रमते । विष्णुः । एव । भूत्वा । यजमानः । छन्दोभिरितिछन्दः-भिः । इमान् । लोकान् । अनपजय्यमित्यनप-जय्यम् । अभीति । जयति । विष्णोः । क्रमः । असि । अभिमातिहेत्यभिमाति-हा । इति । आह । गायत्री । वै । पृथिवी । त्रैष्टुभम् । अन्तरिक्षम् । जागती । द्यौः । आनुष्टुभीरित्यानु-स्तुभीः ।

दिशः । छन्दोभिरितिछन्दःऽभिः । एव । इमान् । लोकान् । यथापूर्वमितियथा-पूर्वम् । अभीति । जयति ॥ [ २४ ] यजमानेनेतिचैतदवभृथो दिशस्सप्तचं ॥५॥

अगन्म । सुवः । सुवः । अगन्म । इति । आह । सुवर्गमितिसुवः-गम् । एव । लोकम् । एति । सन्दृशइतिसं-दृशः । ते । मा । छित्सि । यत् । ते । तपः । तस्मै । ते । मा । एति । वृक्षि । इति । आह । यथायजुरितियथा-यजुः । एव । एतत् । सुभूरितिसु-भूः । असि । श्रेष्ठः । रश्मीनाम् । आयुर्धाइत्यायुः-धाः । असि । आयुः । मे । धेहि । इति । आह । आशिषमित्या-शिषम् । एव । एताम् । एति । शास्ते । प्रेति । वै । एषः । अस्मात् । लोकात् । च्यवते । यः । [२५] विष्णुक्रमानितिविष्णु-क्रमान् । क्रमते । सुवर्गायेतिसुवः-गाय । हि । लोकाय । विष्णुक्रमाइतिविष्णु-क्रमाः । क्रम्यन्ते । ब्रह्मवादिनइतिब्रह्म-वादिनः । वदन्ति । सः । तु । वै । विष्णुक्रमानितिविष्णु-क्रमान् । क्रमेत । यः । इमान् । लोकान् । भ्रातृव्यस्य । संविद्येतिसं-विद्य । पुनः । इमम् । लोकम् । प्रत्यवरोहेदितिप्रति-अवरोहेत् । इति । एषः । वै । अस्य । लोकस्य । प्रत्यवरोहइतिप्रति-अवरोहः । यत् । आह । इदम् । अहम् । अमुम् । भ्रातृव्यम् । आभ्यः । दिग्भ्यइतिदिक्-भ्यः । अस्यै । दिवः । इति । इमान् । एव । लोकान् । भ्रातृव्यस्य । संविद्येतिसं-विद्य । पुनः । इमम् । लोकम् । प्रत्यवरोहतीतिप्रति-अवरोहति । समिति । [ २६ ] ज्योतिषा । अभूवम् । इति । आह । अस्मिन्न् । एव । लोके । प्रतीति । तिष्ठति । ऐन्द्रीम् । आवृतमित्या-वृतम् । अन्वावर्तइत्यनु-आवर्ते । इति । आह । असौ । वै । आदित्यः । इन्द्रः । तस्य । एव । आवृतमित्या-वृतम् । अन्वितिं । पर्यावर्ततइतिपरि-आवर्तते । दक्षिणा । पर्यावर्ततइतिपरि-आवर्तते । स्वम् । एव । वीर्यम् । अन्विति । पर्यावर्ततइतिपरि-आवर्तते । तस्मात् । दक्षिणः । अर्धः । आत्मनः । वीर्यावत्तरइतिवीर्यावत्-तरः । अथोइति । आदित्यस्य । एव । आवृतमित्या-वृतम् । अन्विति । पर्यावर्ततइतिपरि-आवर्तते । समिति । अहम् । प्रजयेतिप्र-जया । समिति । मया । प्रजेतिप्र-जा । इति । आह । आशिषमित्या-शिषम् । [ २७ ] एव । एताम् । एति । शास्ते । समिद्धइतिसं-इद्धः । अग्ने । मे । दीदिहि । सुमेद्धेतिसं-एद्धा । ते । अग्ने । दीद्यासम् । इति । आह । यथायजुरितियथा-यजुः । एव । ए

तत् । वसुमानितिवसु-मान् । यज्ञः । वसीयान् । भूयासम् । इति । आह । आशि षमित्या-शिषम् । एव । एताम् । एति । शास्ते । बहु । वै । गार्हपत्यस्येतिगा र्हे-पत्यस्य । अन्ते । मिश्रम् । इव । चर्यते । आग्निपावमानीभ्यामित्याग्नि-पावमा नीभ्याम् । गार्हपत्यमितिगार्हे-पत्यम् । उपेति । तिष्ठते । पुनाति । एव । अ ग्निम् । पुनीते । आत्मानम् । द्वाभ्याम् । प्रतिष्ठित्याइतिप्रति-स्थित्यै । अग्ने । गृ हपतइतिगृह-पते । इति । आह । [२८] यथायजुरितियथा-यजुः । एव । एतत् । शतम् । हिमाः । इति । आह । शतम् । त्वा । हेमन्तान् । इन्धिषीय । इति । वाव । एतत् । आह । पुत्रस्य । नाम । गृह्णाति । अन्नादमित्यन्न-अदम् । एव । एनम् । करोति । ताम् । आशिषमित्या-शिषम् । एति । शास्ते । तन्तवे । ज्यो तिष्मतीम् । इति । ब्रूयात् । यस्य । पुत्रः । अजातः । स्यात् । तेजस्वी । एव । अस्य । ब्रह्मवर्चसीतिब्रह्म-वर्चसी । पुत्रः । जायते । ताम् । आशिषमित्या-शिषम् । एति । शास्ते । अमुष्मै । ज्योतिष्मतीम् । इति । ब्रूयात् । यस्य । पुत्रः । [२९] जातः । स्यात् । तेजः । एव । अस्मिन् । ब्रह्मवर्चसमितिब्रह्म-वर्चसम् । दधाति । यः । वै । यज्ञम् । प्रयुज्येतिप्र-युज्य । न । विमुञ्चतीतिवि-मुञ्चति । अप्रतिष्ठानइत्य प्रति-स्थानः । वै । सः । भवति । कः । त्वा । युनक्ति । सः । त्वा । वीति । मुञ्च तु । इति । आह । प्रजापतिरितिप्रजा-पतिः । वै । कः । प्रजापतिनेतिप्रजा-पति ना । एव । एनम् । युनक्ति । प्रजापतिनेतिप्रजा-पतिना । वीति । मुञ्चति । प्रति ष्ठित्याइतिप्रति-स्थित्यै । ईश्वरम् । वै । व्रतम् । अविसृष्टमित्यवि-सृष्टम् । प्रदहइतिप्र- दहः । अग्ने । व्रतपतइतिव्रत-पते । व्रतम् । अचारिषम् । इति । आह । व्रतम् । ए व । [३०] वीति । सृजते । शान्त्यै । अप्रदाहायेत्यप्र-दाहाय । पराङ् । वाव । य ज्ञः । एति । न । नीति । वर्तते । पुनः । यः । वै । यज्ञस्य । पुनरालम्भमितिपुनः- आलम्भम् । विद्वान् । यजते । तम् । अभि । नीति । वर्तते । यज्ञः । बभूव । सः । एति । बभूव । इति । आह । एषः । वै । यज्ञस्य । पुनरालम्भइतिपुनः-आलम्भः । तेन । एव । एनम् । पुनः । एति । लभते । अनवरुद्धेत्यनव-रुद्धा । वै । एतस्य । विराडितिवि-राट् । यः । आहिताग्निरित्याहित-अग्निः । सन् । असभः । पशवः । खलु । वै । ब्राह्मणस्य । सभा । इष्ट्वा । इ । उत्क्रम्येत्युत्-क्रम्य । ब्रूयात् । गोमा

न्निति॒गो-मा॒न् । अ॒ग्ने । अवि॑मा॒नित्यवि॑-मा॒न् । अ॒श्वी । य॒ज्ञः । इति॑ । अवे॒ति॑ । स॒ भाम् । रु॒न्धे । प्रेति॑ । स॒ह॒स्र॑म् । प॒शून् । आ॒प्नो॒ति॒ । एति॑ । अ॒स्य॒ । प्र॒जाया॒मिति॑ प्र-जाया॑म् । वा॒जी । जा॒य॒ते ॥ [३१] यस्मि॒न्माशिर्ष॒ङ्गृहप॒तइत्या॒ह॒स्मुष्मै॒ज्योति॑ष्म ती॒मिति॒ब्रूया॒द्यस्य॑ पु॒त्वोव्र॒तमे॒व खलु॒वैचतु॑र्वि॑ꣳशतिश्च ॥　❀　❀　॥ ६ ॥

दे॒व॑ । स॒वि॒तः । प्रेति॑ । सु॒व॒ । य॒ज्ञम् । प्रेति॑ । सु॒व॒ । य॒ज्ञप॑ति॒मिति॒यज्ञ-प॒ ति॒म् । भगा॑य । दि॒व्यः । ग॒न्ध॒र्वः ॥ के॒त॒पूरि॒ति॒के॒त-पूः । के॒त॑म् । नः॒ । पु॒ना॒तु॒ । वा॒चः । पतिः॑ । वाच॑म् । अ॒द्य । स्व॒दा॒ति॒ । नः॒ ॥ इन्द्र॑स्य । वज्रः॑ । अ॒सि॒ । वार्त्र॑घ्न॒इति॒ वार्त्र॑-घ्नः । त्वया॑ । अ॒यम् । वृ॒त्रम् । व॒ध्या॒त् ॥ वाज॑स्य । नु । प्र॒स॒वइति॑प्र-स॒वे । मा॒ तर॑म् । म॒हीम् । अदि॑तिम् । नाम॑ । वच॑सा । क॒रा॒म॒हे॒ ॥ यस्या॑म् । इ॒दम् । विश्व॑म् । भुव॑नम् । आ॒वि॒वेशेत्या॑-वि॒वेश॑ । तस्या॑म् । नः॒ । दे॒वः । स॒वि॒ता । धर्म॑ । सा॒वि॒ष॒त् ॥ अ॒फ्स्वित्य॑प्-सु । [३२] अ॒न्तः । अ॒मृत॑म् । अ॒फ्स्वित्य॑प्-सु । भे॒ष॒जम् । अ॒पाम् । उ॒त । प्रश॑स्ति॒ष्विति॒प्र-श॒स्ति॒षु । अश्वाः॑ । भ॒व॒थ॒ । वा॒जि॒नः ॥ वा॒युः । वा॒ । त्वा॒ । मनुः॑ । वा॒ । त्वा॒ । ग॒न्ध॒र्वाः । स॒प्तवि॑ꣳशति॒रिति॑स॒प्त-वि॒ꣳश॒तिः ॥ ते । अग्रे॑ । अश्व॑म् । आ॒यु॒ञ्ज॒न् । ते । अ॒स्मि॒न् । ज॒वम् । एति॑ । अ॒द॒धुः ॥ अ॒पा॑म् । न॒पा॒त् । आ॒शु॒हे॒म॒ न्नित्या॑शु-हे॒म॒न् । यः । ऊ॒र्मिः । क॒कुद्मा॒निति॑क॒कुत्-मा॒न् । प्र॒तू॒र्ति॒रिति॒प्र-तू॒र्तिः । वा॒ज॒सात॑म॒इति॒वाज-सात॑मः । तेन॑ । अ॒यम् । वाज॑म् । से॒त् ॥ विष्णोः॑ । क्रमः॑ । अ॒सि॒ । विष्णोः॑ । क्रा॒न्तम् । अ॒सि॒ । विष्णोः॑ । विक्रा॑न्त॒मिति॒वि-क्रा॒न्त॒म् । अ॒सि॒ । अ॒ङ्क्रौ । न्य॒ङ्कावि॒ति॑नि-अ॒ङ्कौ । अ॒भितः॑ । रथ॑म् । यौ । ध्वा॒न्तम् । वा॒ता॒ग्रमि॒ति॒वात- अ॒ग्र॒म् । अन्विति॑ । स॒ञ्चर॑न्ता॒विति॒सं-चर॑न्तौ । दू॒रेहे॑ति॒रिति॒दू॒रे-हे॒तिः । इ॒न्द्रि॒या॒वा॒न् ती॑न्द्रि॒य-वा॒न् । प॒त॒त्री । ते । नः॒ । अ॒ग्नयः॑ । पप्र॑यः । पा॒र॒य॒न्तु॒ ॥ [३३] अ॒फ्सु न्य॒ङ्कौपञ्च॑दश च ॥　❀　❀　❀　❀　❀　॥७॥

दे॒वस्य॑ । अ॒हम् । स॒वि॒तुः । प्र॒स॒वइति॑प्र-स॒वे । बृ॒ह॒स्पति॑ना । वा॒ज॒जितेति॑वा ज-जिता॑ । वाज॑म् । जे॒ष॒म् । दे॒वस्य॑ । अ॒हम् । स॒वि॒तुः । प्र॒स॒वइति॑प्र-स॒वे । बृ॒ह॒स्प ति॑ना । वा॒ज॒जितेति॑वाज-जिता॑ । वर्षि॑ष्ठम् । नाक॑म् । रु॒हे॒य॒म् । इन्द्रा॑य । वाच॑म् । व॒द॒त॒ । इन्द्र॑म् । वाज॑म् । जा॒प॒य॒त॒ । इन्द्रः॑ । वाज॑म् । अ॒जा॒यि॒त् ॥ अश्वा॑ज॒नीत्य॑ श्व-अ॒ज॒नि॒ । वा॒जि॒नि॒ । वाजे॑षु । वा॒जि॒नी॒व॒तीति॑वाजिनी-व॒ति॒ । अश्वा॑न् । स॒म

ष्विवितिसमत्-सु । वाजय ॥ अर्वा । असि । सप्तिः । असि । वाजी । असि । वा
जिनः । वाजम् । धावत । मरुताम् । प्रसवइतिप्र-सवे । जयत । वीति । योजना ।
मिमीध्वम् । अध्वनः । स्कभ्नीत । [३४] काष्ठाम् । गच्छत । वाजेवाजइतिवाजे-
वाजे । अवत । वाजिनः । नः । धनेषु । विप्राः । अमृताः । ऋतज्ञाइत्यृत-ज्ञाः ॥
अस्य । मध्वः । पिबत । मादयध्वम् । तृप्ताः । यात । पथिभिरितिपथि-भिः । देव
यानैरितिदेव-यानैः ॥ ते । नः । अर्वन्तः । हवनश्रुतइतिहवन-श्रुतः । हवम् । वि
श्वे । शृण्वन्तु । वाजिनः ॥ मितद्रवइतिमित-द्रवः । सहस्रसाइतिसहस्र-साः । मेध
सातेतिमेध-साता । सनिष्यवः ॥ महः । ये । रत्नम् । समिथेष्विवितिसं-इथेषु । ज
भ्रिरे । शम् । नः । भवन्तु । वाजिनः । हवेषु ॥ देवतातेतिदेव-ताता । मितद्रवइ
तिमित-द्रवः । स्वर्काइतिसु-अर्काः ॥ जम्भयन्तः । अहिम् । वृकम् । रक्षाꣳसि । स
नेमि । अस्मत् । युयवन् । [३५] अमीवाः ॥ एषः । स्यः । वाजी । क्षिपणिम् ।
तुरण्यति । ग्रीवायाम् । बद्धः । अपिकक्षइत्यपि-कक्षे । आसनि ॥ क्रतुम् । दधि
क्राइतिदधि-क्राः । अन्वित्यनु । सन्तवीत्वदितिसं-तवीत्वत् । पथाम् । अङ्काꣳसि ।
अन्वित्यनु । आपनीफणदित्या-पनीफणत् ॥ उत । स्म । अस्य । द्रवतः । तुरण्यतः ।
पर्णम् । न । वेः । अन्वित्यनु । वाति । प्रगर्धिनइतिप्र-गर्धिनः ॥ श्येनस्य । इव । ध्रज
तः । अङ्कसम् । परीति । दधिक्राव्णइतिदधि-क्राव्णः । सह । ऊर्जा । तरित्रतः ॥

एति । मा । वाजस्य । प्रसवइतिप्र-सवः । जगम्यात् । एति । द्यावापृथिवीइतिद्या
वा-पृथिवी । विश्वशम्भूइतिविश्व-शम्भू ॥ एति । मा । गन्ताम् । पितरा । [३६]
मातरा । च । एति । मा । सोमः । अमृतत्वायेत्यमृत-त्वाय । गम्यात् ॥ वाजिनः ।
वाजजितइतिवाज-जितः । वाजम् । सरिष्यन्तः । वाजम् । जेष्यन्तः । बृहस्पतेः ।
भागम् । अवेति । जिघ्रत । वाजिनः । वाजजितइतिवाज-जितः । वाजम् । ससृ
वाꣳसः । वाजम् । जिगिवाꣳसः । बृहस्पतेः । भागे । नीति । मृड्ढ्वम् । इयम् ।
वः । सा । सत्या । सन्धेतिसं-धा । अभूत् । याम् । इन्द्रेण । समधध्वमितिसं-अध
ध्वम् । अजीजिपत । वनस्पतयः । इन्द्रम् । वाजम् । वीति । मुच्यध्वम् ॥ [३७]
स्कभ्नीतयुयवन्पितराद्विचत्वारिꣳशच्च ॥ ❀ ❀ ❀ ॥८॥

क्षत्रस्य । उल्बम् । असि । क्षत्रस्य । योनिः । असि । जाये । एति । इ

हि। सुवः। रोहाव। रोहाव। हि। सुवः। अहम्। नौ। उभयोः। सुवः। रो क्ष्यामि। वाजः। च। प्रसवइतिप्र-सवः। च। अपिजइत्यपि-जः। च। क्रतुः। च। सुवः। च। मूर्द्धा। च। व्यश्नियइतिवि-अश्नियः। च। आन्त्यायनः। च। अ न्त्यः। च। भौवनः। च। भुवनः। च। अधिपतिरित्यधि-पतिः। च॥ आयुः। यज्ञेन। कल्पताम्। प्राणइतिप्र-अनः। यज्ञेन। कल्पताम्। अपानइत्यप-अनः। [३८] यज्ञेन। कल्पताम्। व्यानइतिवि-अनः। यज्ञेन। कल्पताम्। चक्षुः। य ज्ञेन। कल्पताम्। श्रोत्रम्। यज्ञेन। कल्पताम्। मनः। यज्ञेन। कल्पताम्। वाक्। यज्ञेन। कल्पताम्। आत्मा। यज्ञेन। कल्पताम्। यज्ञः। यज्ञेन। कल्पताम्। सु वः। देवान्। अगन्म। अमृताः। अभूम। प्रजापतेरितिप्रजा-पतेः। प्रजाइतिप्र-जाः। अभूम। समिति। अहम्। प्रजयेतिप्र-जया। समिति। मया। प्रजेतिप्र-जा। समिति। अहम्। रायः। पोषेण। समिति। मया। रायः। पोषः। अन्नाय। त्वा। अन्नाद्यायेत्यन्न-अद्याय। त्वा। वाजाय। त्वा। वाजजित्यायाइतिवाज-जि त्यायै। त्वा। अमृतम्। असि। पुष्टिः। असि। प्रजननमितिप्र-जननम्। अ सि॥ [३९] अपानोवाजायनवच॥ ❀ ❀ ❀ ॥९॥

वाजस्य। इमम्। प्रसवइतिप्र-सवः। सुषुवे। अग्रे। सोमम्। राजानम्। ओषधीषु। अप्स्वित्यप्-सु॥ ताः। अस्मभ्यमित्यस्म-भ्यम्। मधुमतीरितिमधु-मतीः। भव न्तु। वयम्। राष्ट्रे। जागृयाम। पुरोहिताइतिपुरः-हिताः॥ वाजस्य। इदम्। प्रसवइतिप्र-सवः। एति। बभूव। इमा। च। विश्वा। भुवनानि। सर्वतः॥ सः। विराजमितिवि-राजम्। परीति। एति। प्रजानन्नितिप्र-जानन्। प्रजामि तिप्र-जाम्। पुष्टिम्। वर्द्धयमानः। अस्मेइति॥ वाजस्य। इमाम्। प्रसवइतिप्र-सवः। शिश्रिये। दिवम्। इमा। च। विश्वा। भुवनानि। सम्राडितिसं-राट्॥ अदित्सन्तम्। दापयतु। प्रजानन्नितिप्र-जानन्। रयिम्। [४०] च। नः। स र्ववीरामितिसर्व-वीराम्। नीति। यच्छतु॥ अग्ने। अच्छ। वद। इह। नः। प्र तीति। नः। सुमनाइतिसु-मनाः। भव॥ प्रेति। नः। यच्छ। भुवः। पते। धन दाइतिधन-दाः। असि। नः। त्वम्॥ प्रेति। नः। यच्छतु। अर्यमा। प्रेति। भ गः। प्रेति। बृहस्पतिः॥ प्रेति। देवाः। प्रेति। उत। सूनृता। प्रेति। वाक्। दे

वी । ददातु । नः ॥ अर्यमणम् । बृहस्पतिम् । इन्द्रम् । दानाय । चोदय ॥ वाचम् । विष्णुम् । सरस्वतीम् । सवितारम् । [ ४१ ] च । वाजिनम् ॥ सोमम् । राजानम् । वरुणम् । अग्निम् । अन्वारभामहइत्यनु-आरभामहे ॥ आदित्यान् । विष्णुम् । सूर्यम् । ब्रह्माणम् । च । बृहस्पतिम् ॥ देवस्य । त्वा । सवितुः । प्रसवइतिप्र-सवे । अश्विनोः । बाहुभ्यामितिबाहु-भ्याम् । पूष्णः । हस्ताभ्याम् । सरस्वत्यै । वाचः । यन्तुः । यन्त्रेण । अग्नेः । त्वा । साम्राज्येनेतिसां-राज्येन । अभीति । सिञ्चामि । इन्द्रस्य । बृहस्पतेः । त्वा । साम्राज्येनेतिसां-राज्येन । अभीति । सिञ्चामि ॥ [ ४२ ] रयिꣳसवितारꣳषट्त्रिꣳशच्च ॥ ❀ ❀ ❀ ॥ १० ॥

अग्निः । एकाक्षरेणेत्येक-अक्षरेण । वाचम् । उदिति । अजयत् । अश्विनौ । द्व्यक्षरेणेतिद्वि-अक्षरेण । प्राणापानावितिप्राण-अपानौ । उदिति । अजयताम् । विष्णुः । त्र्यक्षरेणेतित्रि-अक्षरेण । त्रीन् । लोकान् । उदिति । अजयत् । सोमः । चतुरक्षरेणेतिचतुः-अक्षरेण । चतुष्पदइतिचतुः-पदः । पशून् । उदिति । अजयत् । पूषा । पञ्चाक्षरेणेतिपञ्च-अक्षरेण । पङ्क्तिम् । उदिति । अजयत् । धाता । षडक्षरेणेतिषट्-अक्षरेण । षट् । ऋतून् । उदिति । अजयत् । मरुतः । सप्ताक्षरेणेतिसप्त-अक्षरेण । सप्तपदामितिसप्त-पदाम् । शक्वरीम् । उदिति । अजयन्न् । बृहस्पतिः । अष्टाक्षरेणेत्यष्टा-अक्षरेण । गायत्रीम् । उदिति । अजयत् । मित्रः । नवाक्षरेणेतिनव-अक्षरेण । त्रिवृतमितित्रि-वृतम् । । स्तोमम् । उदिति । अजयत् । [ ४३ ] वरुणः । दशाक्षरेणेतिदश-अक्षरेण । विराजमितिवि-राजम् । उदिति । अजयत् । इन्द्रः । एकादशाक्षरेणेत्येकादश-अक्षरेण । त्रिष्टुभम् । उदिति । अजयत् । विश्वे । देवाः । द्वादशाक्षरेणेतिद्वादश-अक्षरेण । जगतीम् । उदिति । अजयन्न् । वसवः । त्रयोदशाक्षरेणेतित्रयोदश-अक्षरेण । त्रयोदशमितित्रयः-दशम् । स्तोमम् । उदिति । अजयन्न् । रुद्राः । चतुर्दशाक्षरेणेतिचतुर्दश-अक्षरेण । चतुर्दशमितिचतुः-दशम् । स्तोमम् । उदिति । अजयन्न् । आदित्याः । पञ्चदशाक्षरेणेतिपञ्चदश-अक्षरेण । पञ्चदशमितिपञ्च-दशम् । स्तोमम् । उदिति । अजयन्न् । अदितिः । षोडशाक्षरेणेतिषोडश-अक्षरेण । षोडशम् । स्तोमम् । उदिति । अजयत् । प्रजापतिरितिप्रजा-पतिः । सप्तदशाक्षरेणेतिसप्तदश-अक्षरेण । सप्तदश

मितिसप्त-दशम् । स्तोमम् । उदिति । अजयत् ॥ [४४] त्रिवृतꣳस्तोममुदजयथ्षट् चत्वारिꣳशच्च ॥ ❀ ❀ ❀ ❀ ❀ ॥११॥

उपयामगृहीतइत्युपयाम-गृहीतः । असि । नृषदमितिनृ-सदम् । त्वा । द्रुषदमितिद्रु-सदम् । भुवनसदमितिभुवन-सदम् । इन्द्राय । जुष्टम् । गृह्णामि । एषः । ते । योनिः । इन्द्राय । त्वा । उपयामगृहीतइत्युपयाम-गृहीतः । असि । अफ्सुषदमित्यफ्सु-सदम् । त्वा । घृतसदमितिघृत-सदम् । व्योमसदमितिव्योम-सदम् । इन्द्राय । जुष्टम् । गृह्णामि । एषः । ते । योनिः । इन्द्राय । त्वा । उपयामगृहीतइत्युपयाम-गृहीतः । असि । पृथिविषदमितिपृथिवि-सदम् । त्वा । अन्तरिक्षसदमित्यन्तरिक्ष-सदम् । नाकसदमितिनाक-सदम् । इन्द्राय । जुष्टम् । गृह्णामि । एषः । ते । योनिः । इन्द्राय । त्वा ॥ ये । ग्रहाः । पञ्चजनीनाइतिपञ्च-जनीनाः । येषाम् । तिस्रः । परमजाइतिपरम-जाः ॥ दैव्यः । कोशः । [४५] समुब्जितइतिसं-उब्जितः ॥ तेषाम् । विशिप्रियाणामितिवि-शिप्रियाणाम् । इषम् । ऊर्जम् । समिति । अग्रभीम् । एषः । ते । योनिः । इन्द्राय । त्वा ॥ अपाम् । रसम् । उद्वयसमित्युत्-वयसम् । सूर्यरश्मिमितिसूर्य-रश्मिम् । समाभृतमितिसं-आभृतम् ॥ अपाम् । रसस्य । यः । रसः । तम् । वः । गृह्णामि । उत्तममित्युत्-तमम् । एषः । ते । योनिः । इन्द्राय । त्वा ॥ अया । विष्ठाइतिवि-स्थाः । जनयन्न् । कर्वराणि । सः । हि । घृणिः । उरुः । वराय । गातुः ॥ सः । प्रति । उदिति । एतु । धरुणः । मध्वः । अग्रम् । स्वायाम् । यत् । तनुवाम् । तनूम् । ऐरयत ॥ उपयामगृहीतइत्युपयाम-गृहीतः । असि । प्रजापतयइतिप्रजा-पतये । त्वा । जुष्टम् । गृह्णामि । एषः । ते । योनिः । प्रजापतयइतिप्रजा-पतये । त्वा ॥ [४६] कोशस्तनुवान्त्रयोदश च ॥ ❀ ॥१२॥

अन्विति । अह । मासाः । अन्विति । इत् । वनानि । अन्विति । ओषधीः । अन्विति । पर्वतासः ॥ अन्विति । इन्द्रम् । रोदसीइति । वावशानेइति । अन्विति । आपः । अजिहत । जायमानम् ॥ अन्विति । ते । दायि । महे । इन्द्रियाय । सत्रा । ते । विश्वम् । अन्विति । वृत्रहत्यइतिवृत्र-हत्ये ॥ अन्विति । क्षत्रम् । अन्विति । सहः । यजत्र । इन्द्र । देवेभिः । अन्विति । ते । नृषह्यइ

नृ-सह्यें ॥ इन्द्राणीम् । आसु । नारिषु । सुपत्नीमितिंसु-पत्नीम् । अहम् । अश्रवम् ॥ न । हि । अस्याः । अपरम् । चन । जरसा । [४७] मरंते । पतिः ॥ न । अहम् । इन्द्राणि । रारण । सख्युः । वृषाकंपेरितिवृषा-कपेः । ऋते ॥ यस्यं । इदम् । अप्यंम् । हविः । प्रियम् । देवेषु । गच्छंति ॥ यः । जातः । एव । प्रथमः । मनंस्वान् । देवः । देवान् । क्रतुना । पर्यभूषदितिंपरि-अभूषत् ॥ यस्यं । शुष्मात् । रोदसीइति । अभ्यंसेताम् । नृम्णस्यं । मह्ना । सः । जनासः । इन्द्रः ॥ एति । ते । महः । इन्द्र । ऊती । उग्र । समंन्यवइतिस-मन्यवः । यत् । समरन्तेतिसं-अरन्त । सेनाः ॥ पताति । दिद्युत् । नर्यस्य । बाहुवोः । मा । ते । [४८] मनः । विष्वद्रियगितिविष्व-द्रियंक् । वीति । चारीत् ॥ मा । नः । मर्द्धीः । एति । भर । दद्धि । तत् । नः । प्रेति । दाशुषे । दातवे । भूरि । यत् । ते ॥ नव्यें । देष्णे । शस्ते । अस्मिन्न् । ते । उक्थे । प्रेति । ब्रवाम । वयम् । इन्द्र । स्तुवन्तः ॥ एति । तु । भर । माकिः । एतत् । परीति । स्थात् । विद्म । हि । त्वा । वसुंपतिमितिवसु-पतिम् । वसूनाम् ॥ इन्द्र । यत् । ते । माहिनम् । दत्रम् । अस्ति । अस्मभ्यमित्यस्म-भ्यम् । तत् । हर्यश्वेतिंहरि-अश्व । [४९] प्रेति । यन्धि ॥ प्रदातारमितिप्र-दातारम् । हवामहे । इन्द्रम् । एति । हविषा । वयम् ॥ उभा । हि । हस्ता । वसुना । पृणस्व । आ । प्रेति । यच्छ । दक्षिणात् । एति । उत । सव्यात् ॥ प्रदातेतिप्र-दाता । वज्री । वृषभः । तुराषाट् । शुष्मी । राजा । वृत्रहेतिवृत्र-हा । सोमपावेतिसोम-पावा ॥ अस्मिन्न् । यज्ञे । बर्हिषि । एति । निषद्येतिनि-सद्य । अर्थ । भव । यजमानाय । शम् । योः ॥ इन्द्रः । सुत्रामेतिंसु-त्रामा । स्ववानितिस्व-वान् । अवोभिरित्यर्वः-भिः । सुमृडीकइतिसु-मृडीकः । भवतु । विश्ववेदाइतिविश्व-वेदाः ॥ बार्धताम् । द्वेषः । अभयम् । कृणोतु । सुवीर्यस्येतिसु-वीर्यस्य । [५०] पतयः । स्याम ॥ तस्यं । वयम् । सुमताविति सु-मतौ । यज्ञियस्य । अपीति । भद्रे । सौमनसे । स्याम ॥ सः । सुत्रामेतिसु-त्रामा । स्ववानितिस्व-वान् । इन्द्रः । अस्मेइति । आरात् । चित् । द्वेषः । सनुतः । युयोतु ॥ रेवतीः । नः । सधमादइतिसध-मादः । इन्द्रे । सन्तु । तुविवाजाइतितुवि-वाजाः ॥ क्षुमन्तः । याभिः । मदेम ॥ प्रोइति । स्विति । अस्मै । पुरोरथमितिपुरः-रथम् । इन्द्रा

य । शूषम् । अर्चत ॥ अभीके । चित् । उ । लोककृदितिलोक-कृत् । सङ्गे । सम त्स्विति समत्-सु । वृत्रहेतिवृत्र-हा ॥ अस्माकम् । बोधि । चोदिता । नभन्ताम् । अन्यकेषाम् ॥ ज्याकाः । अधीति । धन्वस्विति धन्व-सु ॥ [ ५१ ] जरसामातैर्हर्यश्व सुवीर्यस्याध्येकश्च ॥ ❀ ❀ ❀ ❀ ॥ १३ ॥

पाकयज्ञꣳसꣳश्रवाः परोक्षम्बर्हिषोऽहन्धुवामगन्मेत्याहदेवंसवितर्देवस्याहङ्क्षत्रस्योल्बꣳवाजस्येममग्निरेकाक्षरेणोपयामगृहीतोऽस्यन्वहमासास्त्रयोदश ॥१३॥ पाकयज्ञम्परोक्षंन्ध्रुवांविसृजतेचनस्सर्वैर्वीराम्पतयस्स्यामैकपञ्चाशत् ॥ ५१ ॥ पाकयज्ञन्धन्वंसु ॥ हरिः ओ ( ३ ) म् ॥

इति प्रथमकाण्डे सप्तमः प्रश्नः ॥

---

## अथ प्रथमकाण्डे अष्टमः प्रश्नः ॥

अनुमत्याइत्यनु-मत्यै । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिंतिं । वपति । धेनुः । दक्षिणा । ये । प्रत्यञ्चः । शम्यायाः । अवशीयन्तइत्यव-शीयन्ते । तम् । नैर्ऋतमितिनैः-ऋतम् । एककपालमित्येक-कपालम् । कृष्णम् । वासः । कृष्णतूषमितिकृष्ण-तूषम् । दक्षिणा । वीति । इहि । स्वाहा । आहुतिमित्या-हुतिम् । जुषाणः । एषः । ते । निर्ऋतइतिनिः-ऋते । भागः । भूते । हविष्मती । असि । मुञ्च । इमम् । अꣳहसः । स्वाहा । नमः । यः । इदम् । चकार । आदित्यम् । चरुम् । निरिति । वपति । वरः । दक्षिणा । आग्नावैष्णवमित्याग्ना-वैष्णवम् । एकादशकपालमित्येकादश-कपालम् । वामनः । वही । दक्षिणा । अग्नीषोमीयमित्यग्नी-सोमीयम् । [ १ ] एकादशकपालमित्येकादश-कपालम् । हिरण्यम् । दक्षिणा । ऐन्द्रम् । एकादशकपालमित्येकादश-कपालम् । ऋषभः । वही । दक्षिणा । आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । ऐन्द्रम् । दधि । ऋषभः । वही । दक्षिणा । ऐन्द्राग्नमित्यैन्द्र-अग्नम् । द्वादशकपालमितिद्वादश-कपालम् । वैश्वदेवमितिवैश्व-देवम् । चरुम् । प्रथमजइतिप्रथम-जः । वत्सः । दक्षिणा ।

सौम्यम् । श्यामाकम् । चरुम् । वासः । दक्षिणा । सरस्वत्यै । चरुम् । सरस्वते । चरुम् । मिथुनौ । गावौ । दक्षिणा ॥ [२] अग्नीषोमीयश्चतुस्त्रिंशच्च ॥ ॥१॥

आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपति । सौम्यम् । चरुम् । सावित्रम् । द्वादशकपालमितिद्वादश-कपालम् । सारस्वतम् । चरुम् । पौष्णम् । चरुम् । मारुतम् । सप्तकपालमितिसप्त-कपालम् । वैश्वदेवीमितिवैश्व-देवीम् । आमिक्षाम् । द्यावापृथिव्यमितिद्यावा-पृथिव्यम् । एककपालमित्येक-कपालम् ॥ [३] आग्नेयꣳसौम्यम्मारुतमष्टादश ॥ ❀ ❀ ॥२॥

ऐन्द्राग्नमित्यैन्द्र-अग्नम् । एकादशकपालमित्येकादश-कपालम् । मारुतीम् । आमिक्षाम् । वारुणीम् । आमिक्षाम् । कायम् । एककपालमित्येक-कपालम् । प्रघास्यानितिप्र-घास्यान् । हवामहे । मरुतः । यज्ञवाहसइतियज्ञ-वाहसः । करम्भेण । सजोषसइतिस-जोषसः ॥ मोइति । स्विति । नः । इन्द्र । पृथ्स्वितिपृत्-सु । देव । अस्तु । स्म । ते । शुष्मिन्न् । अवया ॥ मही । हि । अस्य । मीढुषः । यव्या ॥ हविष्मतः । मरुतः । वन्दते । गीः ॥ यत् । ग्रामे । यत् । अरण्ये । यत् । सभायाम् । यत् । इन्द्रिये ॥ यत् । शूद्रे । यत् । अर्ये । एनः । चकृम । वयम् ॥ यत् । एकस्य । अधीति । धर्मणि । तस्य । अवयजनमित्यव-यजनम् । असि । स्वाहा ॥ अक्रन्न् । कर्म । कर्मकृतइतिकर्म-कृतः । सह । वाचा । मयोभुवेतिमयः-भुवा ॥ देवेभ्यः । कर्म । कृत्वा । अस्तम् । प्रेति । इत । सुदानवइतिसु-दानवः ॥ [४] वयय्यद्विꣳशतिश्च ॥ ❀ ❀ ❀ ❀ ॥३॥

अग्नये । अनीकवतइत्यनीक-वते । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपति । साकम् । सूर्येण । उद्यतेत्युत्-यता । मरुद्भ्यइतिमरुत्-भ्यः । सान्तपनेभ्यइतिसां-तपनेभ्यः । मध्यन्दिने । चरुम् । मरुद्भ्यइतिमरुत्-भ्यः । गृहमेधिभ्यइतिगृहमेधि-भ्यः । सर्वासाम् । दुग्धे । सायम् । चरुम् । पूर्णा । दर्वि । परेति । पत । सुपूर्णेतिसु-पूर्णा । पुनः । एति । पत ॥ वस्ना । इव । वीति । क्रीणावहै । इषम् । ऊर्जम् । शतक्रतोइतिशत-क्रतो ॥ देहि । मे । ददामि । ते । नीति । मे । धेहि । नीति । ते । दधे ॥ निहारमितिनि-हारम् । इत् । नीति । मे । हर । निहारमितिनि-हारम् । [५] नीति । हरामि । ते ॥ मरुद्भ्यइतिमरुत्-भ्यः । क्रीडिभ्यइति

क्रीडि-भ्यः । पुरोडाशम् । सप्तकपालमितिसप्त-कपालम् । निरिति । वपति । साकम् । सूर्येण । उद्यतेत्युत्-यता । आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपति । सौम्यम् । चरुम् । सावित्रम् । द्वादशकपालमितिद्वादश-कपालम् । सारस्वतम् । चरुम् । पौष्णम् । चरुम् । ऐन्द्राग्नमित्यैन्द्र-अग्नम् । एकादशकपालमित्येकादश-कपालम् । ऐन्द्रम् । चरुम् । वैश्वकर्मणमितिवैश्व-कर्मणम् । एककपालमित्येक-कपालम् ॥ [ ६ ] हरिनिहारन्त्रिꣳशच्च ॥ ❀ ❀ ॥४॥

सोमाय । पितृमतइतिपितृ-मते । पुरोडाशम् । षट्कपालमितिषट्-कपालम् । निरिति । वपति । पितृभ्यइतिपितृ-भ्यः । बर्हिषद्भ्यइतिबर्हिषत्-भ्यः । धानाः । पितृभ्यइतिपितृ-भ्यः । अग्निष्वात्तेभ्यइत्यग्नि-स्वात्तेभ्यः । अभिवान्यायाइत्यभि-वान्यायै । दुग्धे । मन्थम् । एतत् । ते । तत । ये । च । त्वाम् । अन्विति । एतत् । ते । पितामह । प्रपितामहेतिप्र-पितामह । ये । च । त्वाम् । अन्विति । अत्र । पितरः । यथाभागमितियथा-भागम् । मन्दध्वम् । सुसन्दृशमितिसु-सन्दृशम् । त्वा । वयम् । मघवन्नितिमघ-वन्न् । मन्दिषीमहि ॥ प्रेति । नूनम् । पूर्णवन्धुरइतिपूर्ण-वन्धुरः । स्तुतः । यासि । वशान् । अनु ॥ योज । नु । इन्द्र । ते । हरीइति ॥ [ ७ ] अक्षन्न् । अमीमदन्त । हि । अवेति । प्रियाः । अधूषत ॥ अस्तोषत । स्वभानवइतिस्व-भानवः । विप्राः । नविष्ठया । मती ॥ योज । नु । इन्द्र । ते । हरीइति ॥ अक्षन्न् । पितरः । अमीमदन्त । पितरः । अतीतृपन्त । पितरः । अमीमृजन्त । पितरः ॥ परेति । इत । पितरः । सोम्याः । गम्भीरेः । पथिभिरितिपथि-भिः । पूर्व्यैः ॥ अथ । पितॄन् । सुविदत्रानितिसु-विदत्रान् । अपीति । इत । यमेन । ये । सधमादमितिसध-मादम् । मदन्ति ॥ मनः । नु । एति । हुवामहे । नाराशꣳसेन । स्तोमेन । पितॄणाम् । च । मन्मभिरितिमन्म-भिः ॥ एति । [ ८ ] नः । एतु । मनः । पुनः । क्रत्वे । दक्षाय । जीवसे ॥ ज्योक् । च । सूर्यम् । दृशे ॥ पुनः । नः । पितरः । मनः । ददातु । दैव्यः । जनः ॥ जीवम् । व्रातम् । सचेमहि ॥ यत् । अन्तरिक्षम् । पृथिवीम् । उत । द्याम् । यत् । मातरम् । पितरम् । वा । जिहिꣳसिम ॥ अग्निः । मा । तस्मात् । एनसः । गार्हपत्यइतिगार्ह-पत्यः । प्रेति । मुञ्चतु । दुरितेतिदुः-इता । यानि । चकृम । करोतु । माम् । अनेनसम् ॥ [ ९ ] ह

रीमन्नंभिराचतुश्चत्वारिꣳशच्च ॥ ❀ ❀ ❀ ॥ ५ ॥

प्रतिपूरुषमितिंप्रति-पूरुषम् । एकंकपालानित्येकं-कपालान् । निरिति । व पति । एकम् । अतिरिक्तमित्यति-रिक्तम् । यावंन्तः । गृह्याः । स्मः । तेभ्यः । कम् । अकरम् । पशूनाम् । शर्म । असि । शर्म । यजमानस्य । शर्म । मे । यच्छ । एकः । एव । रुद्रः । न । द्वितीयाय । तस्थे । आखुः । ते । रुद्र । पशुः । तम् । जुषस्व । एषः । ते । रुद्र । भागः । सह । स्वस्रा । अम्बिकया । तम् । जुषस्व । भेषजम् । गवे । अश्वाय । पुरुषाय । भेषजम् । अथोइति । अस्मभ्यमित्यस्म-भ्यम् । भेषजम् । सुभेषजमितिसु-भेषजम् । [१०] यथा । असति ॥ सुगमितिसु-गम् । मेषाय । मेष्यै । अवेति । अम्ब । रुद्रम् । अदिमहि । अवेति । देवम् । त्र्यम्बकमितित्रि-अम्बकम् ॥ यथा । नः । श्रेयसः । करत् । यथा । नः । वस्यसः । करत् । यथा । नः । पशुमतइतिपशु-मतः । करत् । यथा । नः । व्यवसाययादितिवि-अवसाययात् ॥ त्र्यम्बकमितित्रि-अम्बकम् । यजामहे । सुगन्धिमितिसु-गन्धिम् । पुष्टिवर्द्धनमिति पुष्टि-वर्द्धनम् ॥ उर्वारुकम् । इव । बन्धनात् । मृत्योः । मुक्षीय । मा । अमृतात् ॥ एषः । ते । रुद्र । भागः । तम् । जुषस्व । तेन । अवसेन । परः । मूजवतइतिमूज-वतः । अतीति । इहि । अवततधन्वेत्यवतत-धन्वा । पिनाकहस्तइतिपिनाक-हस्तः । कृत्तिवासाइतिकृत्ति-वासाः ॥ [११] सुभेषजमिहित्रीणिच ॥ ❀ ❀ ॥ ६ ॥

ऐन्द्राग्नमित्यैन्द्र-अग्नम् । द्वादशकपालमितिद्वादश-कपालम् । वैश्वदेवमिति वैश्व-देवम् । चरुम् । इन्द्राय । शुनासीराय । पुरोडाशम् । द्वादशकपालमितिद्वादश-कपालम् । वायव्यम् । पयः । सौर्यम् । एककपालमित्येक-कपालम् । द्वादशगवमितिद्वादश-गवम् । सीरम् । दक्षिणा । आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपति । रौद्रम् । गावीधुकम् । चरुम् । ऐन्द्रम् । दधि । वारुणम् । यवमयमितियव-मयम् । चरुम् । वहिनी । धेनुः । दक्षिणा । ये । देवाः । पुरस्सदइतिपुरः-सदः । अग्निनेत्राइत्यग्नि-नेत्राः । दक्षिणसदइतिदक्षिण-सदः । यमनेत्राइतियम-नेत्राः । पश्चात्सदइतिपश्चात्-सदः । सवितृनेत्राइतिसवितृ-नेत्राः । उत्तरसदइत्युत्तर-सदः । वरुणनेत्राइतिवरुण-नेत्राः । उपरिषदइत्युपरि-सदः । बृहस्पतिनेत्राइतिबृहस्पति-नेत्राः । रक्षोहणइतिरक्षः-हनः । ते । नः । पान्तु । ते । नः ।

अवन्तु । तेभ्यः । [१२] नमः । तेभ्यः । स्वाहा । समूढमितिसं-ऊढम् । रक्षः । सन्दग्धमितिसं-दग्धम् । रक्षः । इदम् । अहम् । रक्षः । अभि । समिति । दहामि । अग्नये । रक्षोघ्नइतिरक्षः-घ्ने । स्वाहा । यमाय । सवित्रे । वरुणाय । बृहस्पतये । दुवस्वते । रक्षोघ्नइतिरक्षः-घ्ने । स्वाहा । प्रष्टिवाहीतिप्रष्टि-वाही । रथः । दक्षिणा । देवस्य । त्वा । सवितुः । प्रसवइतिप्र-सवे । अश्विनोः । बाहुभ्यामितिबाहु-भ्याम् । पूष्णः । हस्ताभ्याम् । रक्षसः । वधम् । जुहोमि । हतम् । रक्षः । अवधिष्म । रक्षः । यत् । वस्तं । तत् । दक्षिणा ॥ [१३] तेभ्यःपञ्चचत्वारिंशच्च ॥ ७ ॥

धात्रे । पुरोडाशम् । द्वादशकपालमितिद्वादश-कपालम् । निरिति । वपति । अनुमत्याइत्यनु-मत्यै । चरुम् । राकायै । चरुम् । सिनीवाल्यै । चरुम् । कुह्वै । चरुम् । मिथुनौ । गावौ । दक्षिणा । आग्नावैष्णवमित्याग्ना-वैष्णवम् । एकादशकपालमित्येकादश-कपालम् । निरिति । वपति । ऐन्द्रावैष्णवमित्यैन्द्रा-वैष्णवम् । एकादशकपालमित्येकादश-कपालम् । वैष्णवम् । त्रिकपालमितित्रि-कपालम् । वामनः । वही । दक्षिणा । अग्नीषोमीयमित्यग्नी-सोमीयम् । एकादशकपालमित्येकादश-कपालम् । निरिति । वपति । इन्द्रासोमीयमितीन्द्रा-सोमीयम् । एकादशकपालमित्येकादश-कपालम् । सौम्यम् । चरुम् । बभ्रुः । दक्षिणा । सौमापौष्णमितिसोमा-पौष्णम् । चरुम् । निरिति । वपति । ऐन्द्रापौष्णमित्यैन्द्रा-पौष्णम् । चरुम् । पौष्णम् । चरुम् । श्यामः । दक्षिणा । वैश्वानरम् । द्वादशकपालमितिद्वादश-कपालम् । निरिति । वपति । हिरण्यम् । दक्षिणा । वारुणम् । यवमयमितियव-मयम् । चरुम् । अश्वः । दक्षिणा ॥ १४ ॥ वैश्वानरन्द्वादशकपालन्निरष्टौच ॥ ८ ॥

बार्हस्पत्यम् । चरुम् । निरिति । वपति । ब्रह्मणः । गृहे । शितिपृष्ठइतिशिति-पृष्ठः । दक्षिणा । ऐन्द्रम् । एकादशकपालमित्येकादश-कपालम् । राजन्यस्य । गृहे । ऋषभः । दक्षिणा । आदित्यम् । चरुम् । महिष्यै । गृहे । धेनुः । दक्षिणा । नैरृतमितिनैः-ऋतम् । चरुम् । परिवृक्त्याइतिपरि-वृक्त्यै । गृहे । कृष्णानाम् । व्रीहीणाम् । नखनिर्भिन्नमितिनख-निर्भिन्नम् । कृष्णा । कूटा । दक्षिणा । आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । सेनान्यइतिसेना-न्यः । गृहे । हिरण्यम् । दक्षिणा । वारुणम् । दशकपालमितिदश-कपालम् । सूतस्य । गृहे । महानिरष्ट

इतिमहा-निरष्टः । दक्षिणा । मारुतम् । सप्तकपालमितिसप्त-कपालम् । ग्रामण्यइतिग्राम-न्यः । गृहे । पृश्निः । दक्षिणा । सावित्रम् । द्वादशकपालमितिद्वादश-कपालम् । [१५] क्षत्तुः । गृहे । उपध्वस्तइत्युप-ध्वस्तः । दक्षिणा । आश्विनम् । द्विकपालमितिद्वि-कपालम् । सङ्ग्रहीतुरितिसं-ग्रहीतुः । गृहे । सवात्यावितिस-वात्यौ । दक्षिणा । पौष्णम् । चरुम् । भागदुघस्येतिभाग-दुघस्य । गृहे । श्यामः । दक्षिणा । रौद्रम् । गावीधुकम् । चरुम् । अक्षावापस्येत्यक्ष-आवापस्य । गृहे । शबलः । उद्वारइत्युत्-वारः । दक्षिणा । इन्द्राय । सुत्राम्णइतिसु-त्राम्णे । पुरोडाशम् । एकादशकपालमित्येकादश-कपालम् । प्रति । निरिति । वपति । इन्द्राय । अंहोमुचइत्यंहः-मुचे । अयम् । नः । राजा । वृत्रहेतिवृत्र-हा । राजा । भूत्वा । वृत्रम् । वध्यात् । मैत्राबार्हस्पत्यमितिमैत्रा-बार्हस्पत्यम् । भवति । श्वेतायै । श्वेतवत्सायाइतिश्वेत-वत्सायै । दुग्धे । स्वयम्मूर्तइतिस्वयं-मूर्ते । स्वयम्मथितइतिस्वयं-मथिते । आज्ये । आश्वत्थे । [१६] पात्रे । चतुस्स्रक्तावितिचतुः-स्रक्तौ । स्वयमवपन्नायाइतिस्वयं-अवपन्नायै । शाखायै । कर्णान् । च । अकर्णान् । च । तण्डुलान् । वीति । चिनुयात् । ये । कर्णाः । सः । पयसि । बार्हस्पत्यः । ये । अकर्णाः । सः । आज्ये । मैत्रः । स्वयङ्कृतेतिस्वयं-कृता । वेदिः । भवति । स्वयन्दिनमितिस्वयं-दिनम् । बर्हिः । स्वयङ्कृतइतिस्वयं-कृतः । इध्मः । सा । एव । श्वेता । श्वेतवत्सेतिश्वेत-वत्सा । दक्षिणा ॥ [१७] द्वादशकपालमाश्वत्थेत्रयस्त्रिंशच्च ॥९॥

अग्नये । गृहपतयइतिगृह-पतये । पुरोडाशम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपति । कृष्णानाम् । व्रीहीणाम् । सोमाय । वनस्पतये । श्यामाकम् । चरुम् । सवित्रे । सत्यप्रसवायेतिसत्य-प्रसवाय । पुरोडाशम् । द्वादशकपालमितिद्वादश-कपालम् । आशूनाम् । व्रीहीणाम् । रुद्राय । पशुपतयइतिपशु-पतये । गावीधुकम् । चरुम् । बृहस्पतये । वाचः । पतये । नैवारम् । चरुम् । इन्द्राय । ज्येष्ठाय । पुरोडाशम् । एकादशकपालमित्येकादश-कपालम् । महाव्रीहीणामितिमहा-व्रीहीणाम् । मित्राय । सत्याय । आम्बानाम् । चरुम् । वरुणाय । धर्मपतयइतिधर्म-पतये । यवमयमितियव-मयम् । चरुम् । सविता । त्वा । प्रसवानामितिप्र-सवानाम् । सुवताम् । अग्निः । गृहपतीनामितिगृह-पतीनाम् । सोमः । वन

स्पतीनाम् । रुद्रः । पशूनाम् । [१८] बृहस्पतिः । वाचाम् । इन्द्रः । ज्येष्ठानाम् । मित्रः । सत्यानाम् । वरुणः । धर्मपतीनामितिधर्म-पतीनाम् । ये । देवाः । देवसुवइतिदेव-सुवः । स्थ । ते । इमम् । आमुष्यायणम् । अनमित्राय । सुवध्वम् । महते । क्षत्राय । महते । आधिपत्यायेत्याधि-पत्याय । महते । जानराज्यायेतिजान-राज्याय । एषः । वः । भरताः । राजा । सोमः । अस्माकम् । ब्राह्मणानाम् । राजा । प्रतीति । त्यत् । नाम । राज्यम् । अधायि । स्वाम् । तनुवम् । वरुणः । अशिश्रेत् । शुचेः । मित्रस्य । व्रत्याः । अभूम । अमन्महि । महतः । ऋतस्य । नाम । सर्वे । व्राताः । वरुणस्य । अभूवन्न् । वीति । मित्रः । एवैः । अरातिम् । अतारीत् । असूषुदन्त । यज्ञियाः । ऋतेन । वीति । उ । त्रितः । जरिमाणम् । नः । आनट् । विष्णोः । क्रमः । असि । विष्णोः । क्रान्तम् । असि । विष्णोः । विक्रान्तमितिवि-क्रान्तम् । असि ॥ [१९] पशूनाव्राताःपञ्चविंशतिश्च ॥ ॥ १० ॥

अर्थेतइत्यर्थ-इतः । स्थ । अपाम् । पतिः । असि । वृषा । असि । ऊर्मिः । वृषसेनइतिवृष-सेनः । असि । व्रजक्षितइतिव्रज-क्षितः । स्थ । मरुताम् । ओजः । स्थ । सूर्यवर्चसइतिसूर्य-वर्चसः । स्थ । सूर्यत्वचसइतिसूर्य-त्वचसः । स्थ । मान्दाः । स्थ । वाशाः । स्थ । शक्करीः । स्थ । विश्वभृतइतिविश्व-भृतः । स्थ । जनभृतइतिजन-भृतः । स्थ । अग्नेः । तेजस्याः । स्थ । अपाम् । ओषधीनाम् । रसः । स्थ । अपः । देवीः । मधुमतीरितिमधु-मतीः । अगृह्णन्न् । ऊर्जस्वतीः । राजसूयायेतिराज-सूयाय । चितानाः ॥ याभिः । मित्रावरुणावितिमित्रा-वरुणौ । अभ्यषिञ्चन्नित्यभि-असिञ्चन्न् । याभिः । इन्द्रम् । अनयन्न् । अतीति । अरातीः ॥ राष्ट्रदाइतिराष्ट्र-दाः । स्थ । राष्ट्रम् । दत्त । स्वाहा । राष्ट्रदाइतिराष्ट्र-दाः । स्थ । राष्ट्रम् । अमुष्मै । दत्त ॥ [२०] अर्थेकादशच ॥ ❀ ❀ ॥११॥

देवीः । आपः । समिति । मधुमतीरितिमधु-मतीः । मधुमतीभिरितिमधु-मतीभिः । सृज्यध्वम् । महि । वर्चः । क्षत्रियाय । वन्वानाः । अनाधृष्टाइत्यना-धृष्टाः । सीदत । ऊर्जस्वतीः । महि । वर्चः । क्षत्रियाय । दधतीः । अनिभृष्टमित्यनि-भृष्टम् । असि । वाचः । बन्धुः । तपोजाइतितपः-जाः । सोमस्य । दात्रम् । असि । शुक्राः । वः । शुक्रेण । उदिति । पुनामि । चन्द्राः । चन्द्रेण । अमृताः । अ

मृतेन । स्वाहां । राजसूयायेतिराज-सूयाय । चितानाः ॥ सधमादइतिसध-मादः । द्युम्निनीः । ऊर्जः । एताः । अनिभृष्टाइत्यनि-भृष्टाः । अपस्युवः । वसानः ॥ पस्त्यासु । चक्रे । वरुणः । सधस्थमितिसध-स्थम् । अपाम् । शिशुः । [२१] मातृतमास्वितिमातृ-तमासु । अन्तः ॥ क्षत्रस्य । उल्बम् । असि । क्षत्रस्य । योनिः । असि । आविन्नः । अग्निः । गृहपतिरितिगृह-पतिः । आविन्नः । इन्द्रः । वृद्धश्रवाइतिवृद्ध-श्रवाः । आविन्नः । पूषा । विश्ववेदाइतिविश्व-वेदाः । आविन्नौ । मित्रावरुणावितिमित्रा-वरुणौ । ऋतावृधावित्यृत-वृधौ । आविन्नेइति । द्यावापृथिवी इतिद्यावा-पृथिवी । धृतव्रतेइतिधृत-व्रते । आविन्ना । देवी । अदितिः । विश्वरूपीतिविश्व-रूपी । आविन्नः । अयम् । असौ । आमुष्यायणः । अस्याम् । विशि । अस्मिन्न् । राष्ट्रे । महते । क्षत्राय । महते । आधिपत्यायेत्याधि-पत्याय । महते । जानराज्यायेतिजान-राज्याय । एषः । वः । भरताः । राजा । सोमः । अस्माकम् । ब्राह्मणानाम् । राजा । इन्द्रस्य । [२२] वज्रः । असि । वार्त्रघ्नइतिवार्त्र-घ्नः । त्वया । अयम् । वृत्रम् । वध्यात् । शत्रुबाधनाइतिशत्रु-बाधनाः । स्थ । पात । मा । प्रत्यञ्चम् । पात । मा । तिर्यञ्चम् । अन्वञ्चम् । मा । पात । दिग्भ्यइतिदिक्-भ्यः । मा । पात । विश्वाभ्यः । मा । नाष्ट्राभ्यः । पात । हिरण्यवर्णावितिहिरण्य-वर्णौ । उषसाम् । विरोकइतिवि-रोके । अयस्स्थूणावित्ययः-स्थूणौ । उदितावित्युत्-इतौ । सूर्यस्य । एतिं । रोहतम् । वरुण । मित्र । गर्तम् । ततः । चक्षाथाम् । अदितिम् । दितिम् । च ॥ [२३] शिशुरिन्द्रस्यैकचत्वारिंशच्च ॥ ❀ ॥ १२ ॥

समिधमितिसं-इधम् । एति । तिष्ठ । गायत्री । त्वा । छन्दसाम् । अवतु । त्रिवृदितित्रि-वृत् । स्तोमः । रथन्तरमितिरथं-तरम् । साम । अग्निः । देवता । ब्रह्म । द्रविणम् । उग्राम् । एति । तिष्ठ । त्रिष्टुप् । त्वा । छन्दसाम् । अवतु । पञ्चदशइतिपञ्च-दशः । स्तोमः । बृहत् । साम । इन्द्रः । देवता । क्षत्रम् । द्रविणम् । विराजमितिवि-राजम् । एति । तिष्ठ । जगती । त्वा । छन्दसाम् । अवतु । सप्तदशइतिसप्त-दशः । स्तोमः । वैरूपम् । साम । मरुतः । देवता । विट् । द्रविणम् । उदीचीम् । एति । तिष्ठ । अनुष्टुबित्यनु-स्तुप् । त्वा । [२४] छन्दसाम् । अवतु । एकविंशइत्येक-विंशः । स्तोमः । वैराजम् । साम । मित्रावरुणावितिमित्रा-वरु

णौ । देवता । बलम् । द्रविणम् । ऊर्ध्वाम् । एति । तिष्ठ । पङ्क्तिः । त्वा । छन्दसाम् । अवतु । त्रिणवत्रयस्त्रिंशाविति त्रिणव-त्रयस्त्रिंशौ । स्तोमौ । शाक्वररैवते इतिशाक्वर-रैवते । सामनीइति । बृहस्पतिः । देवता । वर्चः । द्रविणम् । ईदृङ् । च । अन्यादृङ् । च । एतादृङ् । च । प्रतिदृङ्ङितिप्रति-दृङ् । च । मितः । च । सम्मितइतिसं-मितः । च । सभरइतिस-भरः ॥ शुक्रज्योतिरितिशुक्र-ज्योतिः । च । चित्रज्योतिरितिचित्र-ज्योतिः । च । सत्यज्योतिरितिसत्य-ज्योतिः । च । ज्योतिष्मान् । च । सत्यः । च । ऋतपाइत्यृत-पाः । च । [२५] अत्यंहाइत्यति-अंहाः ॥ अग्नये । स्वाहा । सोमाय । स्वाहा । सवित्रे । स्वाहा । सरस्वत्यै । स्वाहा । पूष्णे । स्वाहा । बृहस्पतये । स्वाहा । इन्द्राय । स्वाहा । घोषाय । स्वाहा । श्लोकाय । स्वाहा । अंशाय । स्वाहा । भगाय । स्वाहा । क्षेत्रस्य । पतये । स्वाहा । पृथिव्यै । स्वाहा । अन्तरिक्षाय । स्वाहा । दिवे । स्वाहा । सूर्याय । स्वाहा । चन्द्रमसे । स्वाहा । नक्षत्रेभ्यः । स्वाहा । अद्भ्यइत्यत्-भ्यः । स्वाहा । ओषधीभ्यइत्योषधि-भ्यः । स्वाहा । वनस्पतिभ्यइतिवनस्पति-भ्यः । स्वाहा । चराचरेभ्यः । स्वाहा । परिप्लवेभ्यइतिपरि-प्लवेभ्यः । स्वाहा । सरीसृपेभ्यः । स्वाहा ॥

[२६] अनुष्टुप्त्वंतपाश्चसरीसृपेभ्यस्स्वाहा ॥　❀　❀　॥१३॥

सोमस्य । त्विषिः । असि । तव । इव । मे । त्विषिः । भूयात् । अमृतम् । असि । मृत्योः । मा । पाहि । दिद्योत् । मा । पाहि । अवेष्टाइत्यव-इष्टाः । दन्दशूकाः । निरस्तमितिनिः-अस्तम् । नमुचेः । शिरः ॥ सोमः । राजा । वरुणः । देवाः । धर्मसुवइतिधर्म-सुवः । च । ये ॥ ते । ते । वाचम् । सुवन्ताम् । ते । ते । प्राणमितिप्र-अनम् । सुवन्ताम् । ते । ते । चक्षुः । सुवन्ताम् । ते । ते । श्रोत्रम् । सुवन्ताम् । सोमस्य । त्वा । द्युम्नेन । अभीति । सिञ्चामि । अग्नेः । [२७] तेजसा । सूर्यस्य । वर्चसा । इन्द्रस्य । इन्द्रियेण । मित्रावरुणयोरितिमित्रा-वरुणयोः । वीर्येण । मरुताम् । ओजसा । क्षत्राणाम् । क्षत्रपतिरितिक्षत्र-पतिः । असि । अतीति । दिवः । पाहि । समाववृत्रन्नितिसं-आववृत्रन् । अधराक् । उदीचीः । अहिम् । बुध्नियम् । अन्विति । सञ्चरन्तीरितिसं-चरन्तीः । ताः । पर्वतस्य । वृषभस्य । पृष्ठे । ना

वः । चरन्ति । स्वसिचइतिस्व-सिचः । इयानाः ॥ रुद्र । यत् । ते । क्रयि । परम् । नाम । तस्मै । हुतम् । असि । यमेष्टमितियम-इष्टम् । असि ॥ प्रजापतइतिप्रजा-पते । न । त्वत् । एतानि । अन्यः । विश्वा । जातानि । परीति । ता । बभूव ॥ यत्कामाइतियत्-कामाः । ते । जुहुमः । तत् । नः । अस्तु । वयम् । स्याम । पतयः । रयीणाम् ॥ [२८] अग्नेस्तैकादशच ॥ ❀ ❀ ॥१४॥

इन्द्रस्य । वज्रः । असि । वार्त्रघ्नइतिवार्त्र-घ्नः । त्वया । अयम् । वृत्रम् । वध्यात् । मित्रावरुणयोरितिमित्रा-वरुणयोः । त्वा । प्रशास्त्रोरितिप्र-शास्त्रोः । प्रशिषेतिप्र-शिषा । युनज्मि । यज्ञस्य । योगेन । विष्णोः । क्रमः । असि । विष्णोः । क्रान्तम् । असि । विष्णोः । विक्रान्तमितिवि-क्रान्तम् । असि । मरुताम् । प्रसवइतिप्र-सवे । जेषम् । आप्तम् । मनः । समिति । अहम् । इन्द्रियेण । वीर्येण । पशूनाम् । मन्युः । असि । तव । इव । मे । मन्युः । भूयात् । नमः । मात्रे । पृथिव्यै । मा । अहम् । मातरम् । पृथिवीम् । हिꣳसिषम् । मा [२९] माम् । माता । पृथिवी । हिꣳसीत् । इयत् । असि । आयुः । असि । आयुः । मे । धेहि । ऊर्क् । असि । ऊर्जम् । मे । धेहि । युङ् । असि । वर्चः । असि । वर्चः । मयि । धेहि । अग्नये । गृहपतयइतिगृह-पतये । स्वाहा । सोमाय । वनस्पतये । स्वाहा । इन्द्रस्य । बलाय । स्वाहा । मरुताम् । ओजसे । स्वाहा । हꣳसः । शुचिषदितिशुचि-सत् । वसुः । अन्तरिक्षसदित्यन्तरिक्ष-सत् । होता । वेदिषदितिवेदि-सत् । अतिथिः । दुरोणसदितिदुरोण-सत् ॥ नृषदितिनृ-सत् । वरसदितिवर-सत् । ऋतसदित्यृत-सत् । व्योमसदितिव्योम-सत् । अब्जाइत्यप्-जाः । गोजाइतिगो-जाः । ऋतजाइत्यृत-जाः । अद्रिजाइत्यद्रि-जाः । ऋतम् । बृहत् ॥ [३०] हिꣳसिषम्मर्तजास्त्रीणिच ॥ ❀ ❀ ❀ ❀ ❀ ॥१५॥

मित्रः । असि । वरुणः । असि । समिति । अहम् । विश्वैः । देवैः । क्षत्रस्य । नाभिः । असि । क्षत्रस्य । योनिः । असि । स्योनाम् । एति । सीद ।

१ सप्तलक्षणे शमानप्रकरणे "न जोहवीमिपरिसोमस्य वृणेसर्वेवोग्रास्थपूर्वः" इति । अस्यार्थः—जोहवीमि, परि, सोमस्य, वृणे, सर्वा, इव, उग्रा, स्थ, इत्येतानि पदानि पूर्वाणि यस्मात् सः तथोक्तः घोषवत्परश्च "पूर्वसूत्रालब्धः 'ता' इति पदरूपश्शब्दः विसर्गान्तो न भवति । यथा । जोहवीमि तावाजम् । परिताबभूव । सोमस्यतामदे । अत्रआवृणे-तानोमृडातः । सर्वाताविष्य । स्वचेवताहविपः । याथिउग्रातानः । नामस्थतावः ॥

सुषदामितिसु-सदाम् । एति । सीद । मा । त्वा । हिꣳसीत् । मा । मा । हिꣳसीत् । नीति । ससाद । धृतव्रतइतिधृत-व्रतः । वरुणः । पस्त्यासु । एति । साम्राज्यायेतिसां-राज्याय । सुक्रतुरितिसु-क्रतुः । ब्रह्मा(३)न् । त्वम् । राजन् । ब्रह्मा । असि । सविता । असि । सत्यसंवइतिसत्य-सवः । ब्रह्मा(३)न् । त्वम् ।

१. 'ब्रह्मन्' इत्यत्र नकारात्पूर्वस्य अकारस्य प्लुतत्वम् । मात्रात्रयेणोच्चारणीयः प्लुतः । तदुक्तं शिक्षायाम्— 'ह्रस्वस्स्यादेकमात्रस्य द्विमात्रस्य तु दीर्घता । त्रिमात्रस्य प्लुतोऽर्चां हि पादो मात्राच्चतुर्थकः' इति ॥ प्लुताश्च परिगणिताः शिक्षायाम्—

'पत्नीवाश्चेतव्याः कार्याश्चित्या रम्याः पताउच्च । होतव्यां मन्यराजांश्च मृज्यां प्राश्याश्च मीयता ॥
कर्तव्या सहस्रामद्राक् सोमाः कामाश्च हा इति । ब्रह्मान्त्व द्विपदा होपां स्थेया अग्नाइ वत्यगान् ॥
हावर्तीश्छिनत्ती च जुहवानीच गच्छती । एतीलाजांञ्छाचीन् सर्वे त्वन्तोदात्ताः प्लुता इमे ॥

एते सर्वेशाचीनन्ताः अन्तोदात्ताः प्लुता इति विज्ञेयाः । यथा, पत्नीवा(3)स्सजूः । न्यङ्ङग्निश्चेतव्या(3): । वायव्यः कार्या(3): । न विचित्या(3)इति । नान्वारम्या(3)इति । यज्ञपता(3)विति । न होतव्या(3)मिति । मन्युराजा(३)न । उन्मृज्या(3)न्न । प्राश्या(3)न्नप्राश्या(3)मिति । प्रचातुर्मास्ययाजीमीयता(3)नप्रमीयता(3)इति । द्वादशारत्नीरशना कर्तव्या(3)त्रयोदश । सहस्रा(3)मिति । सेति ह्रस्वेन किं? साहस्रश्चिन्वीत । अद्रा(3)गित्याह । सोमा(3)न । इयद्वादशविक्रामा(3)इति । आत्मन् हा (3)इत्यह्वयत् । ब्रह्मा(3)न्त्वꣳराजन् । द्विपदा(3)इति । माहोपा(3)मिति । नोपस्थेया(3)इति । गृह्णाम्यग्ना(3)इ । भवत्यगा(3)नग्नीन् । हा(3)वुहा(3)वुहा(3)वु । त्रयोदशारत्नी(3)रिति । सा न छिनत्ती(3)इति । जुहवानी (3)मा । कश्चनगच्छती(३) । सहस्रतम्यन्वेती(3) । लाजी(3)ञ्छाची(३)न् । अन्तोदात्ता इति किं? पत्नीव इत्याह । नदिव्यग्निश्चेतव्य इति । उत्सृज्यामित्याहुः । सहस्रꣳसम्पाद्य । ब्रह्मन्त्वमसि । द्वादशारत्नीरशना भवति । कइदमच्छैतीति । इत्यादौ माभूत् । एवमादिविशेषणेन किं? मन्दधिया सम्यक् प्लुतस्थानदर्शनमास्त्विति ॥

पत्याइति गृहाइ त्वी उत्तानाइत्यवेरपाः । सोमपा असोमपाद्वावश्नुता उवतिष्टिपाय् ॥
सावित्रान्नवेत्था द्वौ व्यमाग्निहोत्रान्नचेतिच । अवेत्योऽवभृथाना द्वौ रम्य पशूश्शृतहवी ॥
स्थेयोऽग्नीर्धीस्विदासीद्वावस्तुहीइ वविन्दती ॥

एते प्लुता विशेषेण विज्ञेयाः । यथा, प्राजापत्या (3) इत्याहुः । इतीति किं? ते प्राजापत्या आग्नेयाः । गृहा(3)इ न । इ इति किं? गृहाभवन्तु । त्वी(3)इत्यब्रवीत् । पदोक्तपदमिति न्यायात्, रभीयाꣳसमिव कृत्वी इत्यत्र प्लुतत्वं न भवति । उत्ताना(3)इति वयमाम् । इतीति किं? उत्तानआङ्गिरसः । ननु 'उत्ताना(3): इत्यत्र मध्यमस्वरस्य प्लुतत्वम् किन्नस्यात्? उच्यते।सर्वेषां पदानां अन्त्यस्यैव प्लुतदर्शनात् । तर्हि 'गृहा(3)इ, यज्ञपता(3)उ, इत्यादावप्यन्त्यस्वरस्य कि न स्यात् । सुतरां परिहारः अवर्णप्लुतस्वरमिति । अवेरपा(3)इत्याह । अवेरिति किं? केनापइति । सोमपा(3)असोमपा(3)इति निगदव्याख्याताः । द्वौ इति किं? सोमपा बाहुशर्द्धी । कश्चिथ्समश्नुता (3)उ । उ इति किं? वामश्नुतः।पुमान् । यज्ञप्रत्यतिष्ठिपा (3) यज्ञपता(3)उ । वेत्थसावित्रा(3)न्नवेत्था(3)इति । द्वाविति किं? सावित्रं जुहोति । होतव्यमाग्निहोत्रा(3)न्नहोतव्यामिति । व्यमिति किं? अग्निहोत्रं जुहोति । न इति किं? पदद्वयमेकत्र वर्तते तत्पूर्वयोः प्लुतत्वमिति ग्रहणेऽपि तद्वाक्यायायमारभ इति केचित् । अवेत्योवभृथा(3)ना(3)इति । द्वाविति किं? अवभृथेयायाति । आङ्गिरसायान इत्याह । मित्रन्न इम् । अन्वारभ्यः पशू(3)र्न । रम्यइति किं? अग्रेपशुर्नयवसे । शृतꣳहवी(3)श्शमितारीति । शृतमिति किं? अथ तद्धविरिति । उपस्थेयोऽग्नी(3)र्न । स्थेयइति किं? अग्निर्नाभिमृशे । अधस्विदासी(3)दुपरिस्विदासी(3)त् । द्वाविति किं? किꣳस्विदासीत् । अस्तुही(3)इत्यब्रुता । अस्त्विति किं? न हीमे यजुषा । इ इति किं? स्तुहि श्रुत, इति केचित् । नत्वाभीरिव विन्दती(3) । वेति किं? याभ्य एवैन विन्दति ॥

राजन्न् । ब्रह्मा । असि । इन्द्रः । असि । सत्यौजाइतिसत्य-ओजाः । [ ३१ ]
ब्रह्मा(३)न् । त्वम् । राजन्न् । ब्रह्मा । असि । मित्रः । असि । सुशेवइतिसु-शेवः ।
ब्रह्मा(३)न् । त्वम् । राजन्न् । ब्रह्मा । असि । वरुणः । असि । सत्यधर्मेतिसत्य-धर्मा ।
इन्द्रस्य । वज्रः । असि । वार्त्रघ्नइतिवार्त्र-घ्नः । तेन । मे । रध्य । दिशः । अभीति ।
अयम् । राजा । अभूत् । सुश्लोकाँ(४)इतिसु-श्लोकाँ(४) । सुमङ्गलाँ (४)इतिसु-मङ्ग
लाँ(४) । सत्यराजा(३)नितिसत्य-राजा(३)न् ॥ अपाम् । नप्त्रे । स्वाहा । ऊर्जः ।
नप्त्रे । स्वाहा । अग्नये । गृहपतयइतिगृह-पतये । स्वाहा ॥ [ ३२ ] सत्यौजाश्चत्वा
रिꣳशच्च ॥ ❀ ❀ ❀ ❀ ❀ ॥ १६ ॥

आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपति । हिरण्यम् । द
क्षिणा । सारस्वतम् । चरुम् । वत्सतरी । दक्षिणा । सावित्रम् । द्वादशकपालमि
तिद्वादश-कपालम् । उपध्वस्तइत्युप-ध्वस्तः । दक्षिणा । पौष्णम् । चरुम् । श्यामः ।
दक्षिणा । बार्हस्पत्यम् । चरुम् । शितिपृष्ठइतिशिति-पृष्ठः । दक्षिणा । ऐन्द्रम् ।
एकादशकपालमित्येकादश-कपालम् । ऋषभः । दक्षिणा । वारुणम् । दशकपाल
मितिदश-कपालम् । महानिरष्टइतिमहा-निरष्टः । दक्षिणा । सौम्यम् । चरुम् । ब
भ्रुः । दक्षिणा । त्वाष्ट्रम् । अष्टाकपालमित्यष्टा-कपालम् । शुण्ठः । दक्षिणा । वै
ष्णवम् । त्रिकपालमितित्रि-कपालम् । वामनः । दक्षिणा ॥ [ ३३ ] आग्नेयꣳहिर
ण्यꣳसारस्वतन्द्विचत्वारिꣳशत् ॥ ❀ ❀ ❀ ॥ १७ ॥

---

१. 'सुश्लोके'त्यत्र ककारात् परः प्लुतः अकारः अनुनासिको भवति । तदुक्तं प्रातिशाख्ये—अकारस्तु संहितायामपि' इति ॥ अस्यार्थः—तुशब्दः 'अप्रग्रहास्समानाक्षराण्यनुनासिकान्येकेषाम्' 'पदश्च प्लुतꣳ शाङ्खायनकाण्डमायनयोः' इति सूत्रयोः परमतयोर्विनिवर्तकः । अपिशब्दस्समुच्चये । पदान्तः प्लुतः अकारः संहितायां पदविभागेऽपि अनुनासिको भवति । अस्य च रङ्गसंज्ञत्वं विधीयते शिक्षायाम्—'अकारोऽन्तः प्लुतो यश्चेदनुनासिक उच्यते । अम्त्रध्वनितुल्यश्च रङ्गसंज्ञ इतीर्यते' ॥ इति ॥ चतुर्मात्रत्वादिकञ्चास्य विधीयते शिक्षान्तरे—'रङ्गप्लुते व्याघ्रशब्दः पूर्वभागे विधीयते । मात्राद्वयं तु तत्रैव तथा निरनुनासिकम् ॥ मूर्धस्थाने तृतीयांशः कांस्यध्वनिसमस्तथा । कण्ठे श्लिष्टस्तथा चैव मात्रिकासंहितस्तथा ॥ चरमांशस्तु नासिक्ये बिलद्वये तथैव च । निसृतांशस्तु तत्रैव मात्रिकासंहितस्तथा ॥ एवं रङ्गप्लुताः प्रोक्ताश्चतुर्मात्रास्समीरिताः ॥ " इति ॥ रङ्गप्लुतान् परिगणयति शिक्षाकारः—श्लोका गला ममा हूता यद्व्रा एवंति च प्लुताः' इति । अस्यार्थः—श्लोकादिषु पञ्चसु पदेषु अन्त्यस्वराः उदात्ताः रङ्गप्लुता भवन्ति । यथा—सुश्लोकाँ(४) । सुमङ्गलाँ(४) । यशोममाँ(४) । उपहूताँ(४) । यद्व्राँ(४) । शिक्षान्तरेऽपि—पूर्वो वर्णः पदान्तस्थो नासिक्यो रङ्गसंज्ञितः । कांस्यध्वनिसमं रङ्गं हृदयादुत्थितं वदेत् ॥ चत्वारः काठके रङ्गा दीर्घा ह्यारण्यके विदुः । पञ्च रङ्गाः प्लुता दीर्घाश्चत्वारस्तैत्तिरीयके ॥ श्लोका सुमङ्गला यद्व्रा उपहूता ममा प्लुताः' इति ॥

सद्यः । दीक्षयन्ति । सद्यः । सोमम् । क्रीणन्ति । पुण्डरिस्रजाम् । प्रेति । यच्छति । दशभिरितिदश-भिः । वत्सतरैः । सोमम् । क्रीणाति । दशपेयइतिदश-पेयः । भवति । शतम् । ब्राह्मणाः । पिबन्ति । सप्तदशमितिसप्त-दशम् । स्तोत्रम् । भवति । प्राकाशौ । अध्वर्यवे । ददाति । स्रजम् । उद्गात्रइत्युत्-गात्रे । रुक्मम् । होत्रे । अश्वम् । प्रस्तोतृप्रतिहर्तृभ्यामितिप्रस्तोतृप्रतिहर्तृ-भ्याम् । द्वादश । पष्ठौहीः । ब्रह्मणे । वशाम् । मैत्रावरुणायेतिमैत्रा-वरुणाय । ऋषभम् । ब्राह्मणाच्छंसिने । वासंसीइति । नेष्टापोतृभ्यामितिनेष्टापोतृ-भ्याम् । स्थूरि । यवाचितमितियव-आचितम् । अच्छावाकाय । अनड्वाहम् । अग्नीधइत्यग्नि-इधे । भार्गवः । होता । भवति । श्रायन्तीयम् । ब्रह्मसाममितिब्रह्म-सामम् । भवति । वारवन्तीयमितिवार-वन्तीयम् । अग्निष्टोमसाममित्यग्निष्टोम-सामम् । सारस्वतीः । अपः । गृह्णाति ॥ [ ३४ ] वारवन्तीयञ्चत्वारिंच ॥ ❀ ❀ ❀ ❀ ❀ ॥१८॥

आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपति । हिरण्यम् । दक्षिणा । ऐन्द्रम् । एकादशकपालमित्येकादश-कपालम् । ऋषभः । दक्षिणा । वैश्वदेवमितिवैश्व-देवम् । चरुम् । पिशङ्गी । पष्ठौही । दक्षिणा । मैत्रावरुणीमितिमैत्रा-वरुणीम् । आमिक्षाम् । वशा । दक्षिणा । बार्हस्पत्यम् । चरुम् । शितिपृष्ठइतिशिति-पृष्ठः । दक्षिणा । आदित्याम् । मल्हाम् । गर्भिणीम् । एति । लभते । मारुतीम् । पृश्निम् । पष्ठौहीम् । अश्विभ्यामित्यश्वि-भ्याम् । पूष्णे । पुरोडाशम् । द्वादशकपालमितिद्वादश-कपालम् । निरिति । वपति । सरस्वते । सत्यवाचइतिसत्य-वाचे । चरुम् । सवित्रे । सत्यप्रसवायेतिसत्य-प्रसवाय । पुरोडाशम् । द्वादशकपालमितिद्वादश-कपालम् । तिसृधन्वमितितिसृ-धन्वम् । शुष्कदृतिरितिशुष्क-दृतिः । दक्षिणा ॥ [ ३५ ] आग्नेयꣳहिरण्यमैन्द्रमृषभो वैश्वदेवम्पिशङ्गीबार्हस्पत्यमादित्याꣳसप्तचत्वारिꣳशत् ॥ ॥१९॥

आग्नेयम् । अष्टाकपालमित्यष्टा-कपालम् । निरिति । वपति । सौम्यम् । चरुम् । सावित्रम् । द्वादशकपालमितिद्वादश-कपालम् । बार्हस्पत्यम् । चरुम् । त्वाष्ट्रम् । अष्टाकपालमित्यष्टा-कपालम् । वैश्वानरम् । द्वादशकपालमितिद्वादश-क

पालम् । दक्षिणा । रथवाहनवाहइतिरथवाहन-वाहः । दक्षिणा । सारस्वतम् । च रुम् । निरिति । वपति । पौष्णम् । चरुम् । मैत्रम् । चरुम् । वारुणम् । चरुम् । क्षैत्र पत्यमितिक्षैत्र-पत्यम् । चरुम् । आदित्यम् । चरुम् । उत्तरइत्युत्-तरः । रथवाहनवा हइतिरथवाहन-वाहः । दक्षिणा ॥ [३६] आग्नेयꣳसौम्यम्बार्हस्पत्यञ्चतुस्त्रिꣳशत् ॥

स्वाद्वीम् । त्वा । स्वादुना । तीव्राम् । तीव्रेण । अमृताम् । अमृतेन । सृजा मि । समिति । सोमेन । सोमः । असि । अश्विभ्यामित्यश्वि-भ्याम् । पच्यस्व । सर स्वत्यै । पच्यस्व । इन्द्राय । सुत्राम्णइतिसु-त्राम्णे । पच्यस्व । पुनातु । ते । परिस्रुत मितिपरि-स्रुतम् । सोमम् । सूर्यस्य । दुहिता ॥ वारेण । शश्वता । तना ॥ वायुः । पूतः । पवित्रेण । प्रत्यङ् । सोमः । अतिद्रुतइत्यति-द्रुतः ॥ इन्द्रस्य । युज्यः । स खा ॥ कुवित् । अङ्ग । यवमन्तइतियव-मन्तः । यवम् । चित् । यथा । दान्ति । अ नुपूर्वमित्यनु-पूर्वम् । वियूयेतिवि-यूय ॥ इहेहेतीह-इह । एषाम् । कृणुत । भोजनानि । ये । बर्हिषः । नमोवृक्तिमितिनमः-वृक्तिम् । न । जग्मुः ॥ आश्विनम् । धूम्रम् । एति । लभते । सारस्वतम् । मेषम् । ऐन्द्रम् । ऋषभम् । ऐन्द्रम् । एकादशकपालमि त्येकादश-कपालम् । निरिति । वपति । सावित्रम् । द्वादशकपालमितिद्वादश-कपा लम् । वारुणम् । दशकपालमितिदश-कपालम् । सोमप्रतीकाइतिसोम-प्रतीकाः । पितरः । तृप्णुत । वडबा । दक्षिणा ॥ [३७] भोजनानिषड्विꣳशतिश्च ॥ २१ ॥

अग्नाविष्णूइत्यग्ना-विष्णू । महि । तत् । वाम् । महित्वमितिमहि-त्वम् । वी तम् । घृतस्य । गुह्यानि । नाम ॥ दमेदमइतिदमे-दमे । सप्त । रत्ना । दधाना । प्र तीति । वाम् । जिह्वा । घृतम् । एति । चरण्येत् ॥ अग्नाविष्णूइत्यग्ना-विष्णू । म हि । धाम । प्रियम् । वाम् । वीथः । घृतस्य । गुह्या । जुषाणा ॥ दमेदमइतिदमे- दमे । सुष्टुतीरितिसु-स्तुतीः । वावृधाना । प्रतीति । वाम् । जिह्वा । घृतम् । उदि ति । चरण्येत् ॥ प्रेति । नः । देवी । सरस्वती । वाजेभिः । वाजिनीवतीतिवाजि नी-वती ॥ धीनाम् । अवित्री । अवतु ॥ एति । नः । दिवः । बृहतः । [३८] प र्वतात् । एति । सरस्वती । यजता । गन्तु । यज्ञम् ॥ हवम् । देवी । जुजुषाणा । घृताची । शग्माम् । नः । वाचम् । उशती । शृणोतु ॥ बृहस्पते । जुषस्व । नः ।

